### दूर्वाक्षतदानमन्त्रः

ॐ आब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामाराष्ट्रे राजन्यः शूर इषव्योऽतिव्याधी महारथो जायतां दोग्ध्री धेनुर्वोढानड्वानाशुः सप्तिः पुरन्ध्रिर्योषा जिष्णू रथेष्ठाः सभेयो युवास्य यजमानस्य वीरो जायताम् । निकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो न ओषधयः पच्यन्ताम् योगक्षेमो नः कल्पताम् । मन्त्रार्थाः सिद्धयः सन्तु पूर्णाः सन्तु मनोरथाः । शत्रूणां बुद्धिनाशोऽस्तु मित्राणामुदयस्तव ।

### यज्ञोपवीतधारणमन्त्रः

**वाजसनेयिनां**—ॐ यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः । **छन्दोगानां**—ॐ यज्ञोपवीतमसि यज्ञस्य त्वोपवीतेनोपनह्यामि । **जीर्णयज्ञोपवीतत्यागमन्त्रः**—एतावद्दिनपर्यन्तं ब्रह्म त्वं धारितं मया । जीर्णत्वात्त्वत्परित्यागो गच्छ सूत्र यथासुखम् ।

### ग्रहाणां यजुर्वेदीय (वाजसनेयि) शान्तिमन्त्राः

**सूर्यस्य**—ॐ आकृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतं मर्त्यञ्च । हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् । **चन्द्रस्य**—ॐ इमं देवा असपत्नग्वं सुबध्वं महते क्षत्राय महते ज्येष्ठयाय महते जानराज्यायेन्द्रस्येन्द्रियाय । इमममुष्य पुत्रममुष्यै पुत्रमस्यै विश एष वोऽमी राजा सोमोऽस्माकं ब्राह्मणानाग्वं राजा । **कुजस्य**—ॐ अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपाग्वं रेताग्वंसि जिन्वति । **बुधस्य**—ॐ उद्बुध्यस्वाग्ने: प्रतिजागृहि त्वमिष्टापूर्ते सग्वं सृजेथामयञ्च । अस्मिन्त्सधस्थे अध्युत्तरस्मिंन् विश्वेदेवा यजमानश्च सीदत । **गुरोः**—ॐ वृहस्पते अतियदर्यो अर्हाद्युमद्विभाति क्रतुमज्जनेषु। यद्दीदयच्छवस ऋत प्रजात तदस्मासु द्रविणन्धेहि चित्रम् । **भृगोः**—ॐ अन्नात्परिस्रुतो रसं ब्रह्मणा व्यपिबत्क्षत्रं पयः सोमं प्रजापतिः । ऋतेन सत्यमिन्द्रियं विपानग्वं शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु । **शनेः**—ॐ शन्नो देवीरभिष्टय आपो भवन्तु पीतये । संयोरभिस्रवन्तु नः । **राहोः**—ॐ कयानश्चित्र आभुव दूती सदावृधः सखा । कया शचिष्ठया वृता । **केतोः**—ॐ केतुं कृण्वन्न केतवे पेशोमर्या अपेशसे । समुषद्भिरजायथाः ।

### ग्रहाणां सामवेदीय (छन्दोग) शान्तिमन्त्राः

**सूर्यस्य**—ॐ उदुत्यञ्जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् । **चन्द्रस्य**—ॐ सन्ते पयांसि समयन्तुबाजाः संवृष्ण्यान्यभिमातिषाहः । आप्यायमानो अमृताय सोम दिवि श्रवांस्युत्तमानिधिष्व। **कुजस्य**—ॐ अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपां रेतांसि जिन्वति । **बुधस्य**—ॐ अग्ने विवश्वदुषसश्चित्रां राह्नो अमर्त्य आदाशुषे। जातवेदो वहात्वमद्या देवो उषर्बुधः । **गुरोः**—ॐ वृहस्पते परिदीयारथेन रक्षोहामित्रां अपबाधमानः । प्रभञ्जत्सेनाः प्रमृणो युधाजयन्नस्माकं मेध्यविता रथानाम्। **शुक्रस्य**—शुक्रन्ते अन्यद्यजन्ते अन्यद्विषुरूपे अहनी द्यौरिवासि विश्वाहि माया । अवसि स्वधावन् भद्रा ते पूषन्निह रातिरस्तु । **शनेः**—ॐ शन्नो देवीरभिष्टये शन्नो भवन्तु पीतये । संयोरभिस्रवन्तु नः । **राहोः**—ॐ कयानश्चित्र आभुवदूती सदा वृधः सखा । कया शचिष्ठया वृता । **केतोः**—ॐ केतुं कृण्वन्न केतवे पेशोमर्या अपेशसे । समुषद्भिरजायथाः ।

# विशिष्टपर्वसूची

| पर्व | तिथि | पर्व | तिथि | पर्व | तिथि |
|---|---|---|---|---|---|
| मीनापञ्चमी | २० जुलाई | अर्द्धकुंभयोगारंभ | १८ अक्टूबर | मकरसंक्रान्ति | १५ जनवरी |
| मधुश्रावणी | २ अगस्त | धन्वन्तरिजयन्ती | २४ अक्टूबर | नरकनिवारण १४ | २१ जनवरी |
| नागपञ्चमी | ४ अगस्त | हनुमानजयन्ती | २५ अक्टूबर | सोमवारी | २३ जनवरी |
| शीतलासप्तमी | ६ अगस्त | दीपावली | २६ अक्टूबर | गणतन्त्रदिवस | २६ जनवरी |
| संस्कृतदिवस | १३ अगस्त | लक्ष्मीपूजा | २६ अक्टूबर | वसन्तपंचमी | २८ जनवरी |
| रक्षाबन्धन | १३ अगस्त | कालीपूजा | २६ अक्टूबर | सरस्वतीपूजा | २८ जनवरी |
| स्वतन्त्रतादिवस | १५ अगस्त | गोवर्द्धनपूजा | २७ अक्टूबर | अचलासप्तमी | ३० जनवरी |
| कृष्णाष्टमी | २२ अगस्त | अन्नकूट | २७ अक्टूबर | माघीपूर्णिमा | ७ फरवरी |
| कुशोत्पाटन | २६ अगस्त | भ्रातृद्वितीया | २८ अक्टूबर | महाशिवरात्रि | २० फरवरी |
| सोमवारी | २६ अगस्त | चित्रगुप्तपूजा | २८ अक्टूबर | शिवदर्शन | २० फरवरी |
| हरितालिका | ३१ अगस्त | प्रतिहारषष्ठीव्रत | १ नवम्बर | होलिकादाह | ७ मार्च |
| चौठचन्द्र | १ सितम्बर | जगद्धात्रीपूजा | २ नवम्बर | होली | ९ मार्च |
| गणेशपूजा | १ सितम्बर | गोपाष्टमी | ३ नवम्बर | सप्ताडोरा | ९ मार्च |
| राधाष्टमी | ५ सितम्बर | अक्षयनवमी | ४ नवम्बर | वारुणीयोग | २० मार्च |
| इन्द्रपूजारंभ | ६ सितम्बर | देवोत्थान ११ | ६ नवम्बर | रामनवमी | १ अप्रैल |
| वामनद्वादशी | ९ सितम्बर | विद्यापतिपर्व | ८ नवम्बर | महावीरजयन्ती | ४ अप्रैल |
| अनन्तपूजा | ११ सितम्बर | सामापूजा | १० नवम्बर | मेषसंक्रान्ति | १३ अप्रैल |
| अगस्त्यार्घदान | १२ सितम्बर | कार्त्तिकेयपूजा | १० नवम्बर | नववर्षारंभ | १३ अप्रैल |
| पितृपक्षारंभ | १३ सितम्बर | हरिहरक्षेत्रस्नान | १० नवम्बर | जुडिशीतल | १४ अप्रैल |
| विश्वकर्मापूजा | १८ सितम्बर | कार्त्तिकी १५ | १० नवम्बर | अक्षयतृतीया | २४ अप्रैल |
| जितिया | २० सितम्बर | वीडपञ्चमी | १५ नवम्बर | परशुरामजयन्ती | २४ अप्रैल |
| मातृनवमी | २१ सितम्बर | अर्द्धकुंभयोगान्त | १७ नवम्बर | रविव्रतान्त | २६ अप्रैल |
| पितृपक्षान्त | २७ सितम्बर | रविव्रतारंभ | २७ नवम्बर | जानकीनवमीव्रत | ३० अप्रैल |
| कलशस्थापन | २८ सितम्बर | नवान्नपार्वणा | २७ नवम्बर | नरसिंह १४ | ४ मई |
| विल्वाभिमन्त्रण | २ अक्टूबर | विवाहपञ्चमी | २६ नवम्बर | बुद्धजयन्ती | ६ मई |
| पत्रिकाप्रवेश | ३ अक्टूबर | नवान्नपार्वण | १ दिसम्बर | वटसावित्री | २० मई |
| निशापूजा | ४ अक्टूबर | गीताजयन्ती | ६ दिसम्बर | गंगादशहरा | ३० मई |
| महाष्टमीव्रत | ४ अक्टूबर | हरिहरक्षेत्रस्नान | १० दिसम्बर | सोमवारी | १८ जून |
| महानवमीव्रत | ५ अक्टूबर | दशातारकारंभ | २४ दिसम्बर | रथयात्रा | २१ जून |
| विजयादशमी | ६ अक्टूबर | दशातारकान्त | ३ जनवरी | हरिशयन ११ | ३० जून |
| कोजागरा | ११ अक्टूबर | कौशिकीस्नान | ६ जनवरी | गुरुपूर्णिमा | ३ जुलाई |
| लक्ष्मीपूजा | ११ अक्टूबर | गणेशावतार | १२ जनवरी | | |

### सौराठसभा

२१ जूनतः २६ जून २०१२ पर्यन्तम् ।

**उपनयनदिनानि**—फरवरी २, ३, २४, २६ । मार्च ४ (क्षत्रियवैश्य)। अप्रील १, २, २६ । जून २२।

**विवाहदिनानि**—नवम्बर, २०, २१, २३, २५, २७, ३० । दिसम्बर—१, ५, ६, ११। जनवरी—१८, १९, २०, २३, २५, २७, २९। फरवरी—२, ३, ८, ९, १०, १५, १६, १७, १९, २३, २४, २६ । मार्च—१, ८, ९, १२ । अप्रील—१५, १६, १८, १९, २५, २६ । जून—८, १०, १३, २४, २५, २८, २९ ।।

### ग्रहणं तत्कृत्यञ्च

१. **मार्गशुक्लपूर्णिमायां शनौ** दि. १० ।१२ ।२०११ ई. रात्रौ **मिथिलायां** प्रमाणिकसमयानुसारं खग्रासचन्द्रग्रहणस्पर्शः घं. ६ मि. १४ मोक्षः घं. ९ मि. ५०। स्थानीयसमयानुसारं स्पर्शो रात्रौ घं. ६ मि. ३४ मोक्षः घं. मोक्षः घं. १० मि. १०। ग्रहणादौ भवेत्स्नानं मध्ये होम सुरार्चनम्। मुच्यमाने भवेद्दानं मुक्ते स्नानं समाचरेत्।। सर्वं गंगासमं तोयं सर्वे ब्रह्मसमा द्विजाः । सर्वं भूमिसमं दानं ग्रहणे नात्र संशयः ।। सूर्यग्रहे तु नाश्नीयात्पूर्वं यामचतुष्टयम्। चन्द्रग्रहे तु यामांस्त्रीन् बालवृद्धातुरैर्विना ।। बालवद्धातुरविषये मार्कण्डेयपुराणे—सायाह्ने ग्रहणं चेत्स्यादपराह्णे न भोजनं । अपराह्ने न मध्याह्ने मध्याह्ने चेन्न संगवे। संगवे ग्रहणं चेत्स्यान्न पूर्वां भोजनक्रियाम् ।। **ग्रहणकाले** नाश्नीयात्। ग्रहणे स्नानदानजपश्राद्धहोमादिकमनन्तफलदं भवति। अशुभदग्रहणशान्त्यर्थं सुवर्णगोदानादिकं कार्यमथवा ग्रहणं नावलोकनीयम् ।

माहेन्द्रवायव्यमण्डलयोर्ग्रहणफलं मिश्रितं (वायुवेग व्याध्यग्निभयसस्यहानि—धर्मकृत्य—विशिष्टकार्यादिरूप) फलं बोद्धव्यम्।



धर्मः सनातनो नित्यं जनैः सम्यगनुष्ठितः ।
राष्ट्रं विधत्ते सबलं समृद्धं निरुपद्रवम् ।।

आस्तिक्यभावनावशंवदानां श्रौतस्मार्त्तकर्मानुष्ठान—तत्पराणां शिष्टानां तदनुशिष्टानामितरेषाञ्च जनानां धर्मोपार्जनौपयिकवर्षव्यापिकृत्य जातसम्पादनोचितकालविशेषप्रबोधनप्रयोजनं निर्वोढुं दैवज्ञवर्य—श्रीरामचन्द्रझाशर्म्मणा विनिर्मितं पण्डितमण्डलीसमनुमोदितं पारम्पर्यक्रमागतं पञ्चाङ्गमिदं नूनमलङ्कर्मीणतां कलयिष्यतीत्याशास्ते।

**श्रीजानकीनवमी** — **डॉ. उमेश शर्मा**
**संवत् २०६८** — **कुलपतिः**

अथैतच्चतुस्त्रिंशत्तमे नूतनतिथिपत्रे मैथिलनिबन्धसम्मतसमय—शुद्धिव्रतपर्वविशिष्टयोगप्रभृतिविषयान् संरक्ष्य समयशुद्धौ विहितमुहूर्त्तानुसारं विवाहोपनयनदेवादिप्रतिष्ठा— द्विरागमनमुण्डनकर्णवेध—यात्रागृहारंभ—प्रवेशप्रभृतिदिनानि सन्निवेशितानि। तानि च विश्वविद्यालय—ज्योतिषशोधकेन्द्राभ्यामायोजित चैत्रपूर्णिमासोम १८ ।४ ।२०११ दिवसीय पण्डितसमयानुमोदितानि ।

अपि च पञ्चाङ्गेऽस्मिन् वैशिष्ट्यमाधातुं स्वकीयाः सम्मतीः संस्कारप्रकारांश्च सहर्षं प्रेषयन्तु सुधीवराः ।

अन्ते चात्र कण्टकजन्यदोषाद् बुद्धिभ्रमदोषाद्वा या अशुद्धयस्ताः पूर्वापरसन्दर्भमवलम्ब्य स्वयमेव संशोध्य व्यवहरन्तु गुणैकपक्षपातिनो विद्वांस इति ।

**श्रीपरशुरामजयन्ती** — **निवेदयति**
**सौर दि. २३।१।१९३३** — **पं. श्रीरामचन्द्र झाः**
**दूरभाष** : ०६४३००६३६४८

### ग्रहणफलम्

| **राशयः**— | मेषः | वृषः | मिथुनं | कर्कः | सिंहः | कन्या | तुला | वृश्चिकः | धनुः | मकरः | कुंभः | मीनः |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| **फलानि**— | क्षतिः, | घातः, | हानिः, | लाभः, | सुखं | अयश, | कष्टम् | स्त्रीकष्टं | सुखं | चिन्ता | व्यथा | धनं |